सर्वं किञ्चिदिदं दृश्यं दृश्यते यज्जगद्गतम् ।
चिन्निस्पन्दांशमात्रांशान्नान्यत्किञ्चन शाश्वतम् ।।५।५९।३२

सव ये दृश्य जगत् जो देखाजाता है वे चित्स्पन्दांश मात्र से दूसरा कुछभी निरन्तर नही हे । ५।५९।३२

समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ।
साधो समाधिशब्देन पराप्रज्ञोच्यते बुधैः ।। ५।६२।६

हे साधु एकाग्रवाला, सदैव तृप्ति होनेवाला सत्यतत्वको साक्षात्कार करने वाला ज्ञानहीको विद्वान् लोग समाधि शब्दसे कहतेहे ।५।६२।६

विद्यादृशि प्रोदयमागतेन
क्षयं त्वविद्याविषये गतेन ।
सर्वत्र संसक्तिविवर्जितेन
स्वचेतसा तिष्ठति यः स मुक्तः ।। ५।६८।५३

ज्ञानके अनुभवमे लगने पर अति प्रकाशोदय होनेवाला और अज्ञानविषयमें पहुचने पर अस्त (क्षीण) होने वाले अपनी चित्तके सर्वत्र आशक्ति रहित वताकर जो रहताहै वह बन्धनरहित (मुक्त) होताहै । मन आसक्ति रहित है तो जहाँ कहींभी सु खही सुखहै ।५।६८।५३

निर्वाणमात्मनि गतः सततोदितात्मा
जीवोऽरुचिर्व्यवहरन्नपि रामभद्र ।
नो सङ्गमेति गतसङ्गतया फलेन
कर्मोद्भवेन सहतीव च देहभारम् ॥ ५।६९।१२

हेराम ! अपने में निर्वाण लीन हुवा निरन्तर चिद्घन आत्म प्रकाशवाला, जीवन्मुक्त जीव, व्यवहारके फलेच्छा रुचि शून्य होके आसक्ति निमित्तक अज्ञान काम कर्म वासना रहित होनेसे कर्मों से होनेवाले फलोंसे संगत रहित होताहै और केवल प्रारब्ध क्षय नहोने तक देहके भारमात्र सहनके नाइँ होताहै । ५।६९।१२

भावेष्वभावघनभावनया महात्मा
निर्मुक्तसंकलनमम्बरवत्स्थितेषु ।
चित्तं प्रति स्वमुदितो विततैकरूपी
ज्ञस्तिष्ठति स्वपिति जीवति नित्यतृप्तः ॥ ५।७७।४४

आत्मासे अलग दूसरा कुछभी नहीहै ऐसा दृढ निश्चयसे सभी दृश्य पदार्थ संकल्प विकल्प रहित रूपसे आकाशकीतरह सन्मात्रस्व रूपसे रहने पर सर्वत्र व्यापक महात्मा ज्ञानी नित्य तृप्त होकर स्वयं निरतिशयानन्द स्वरूपसे आनन्दी होता हुआ जाग्रत स्वप्नमें प्राप्त हुवे वस्तुओंको निः सङ्ग रूपसे विचार करने वाले चित्तमें रहताहै । चित्तके लयमें सुषुप्तिमें रहताहै और प्रारब्धक्षय नहोने तक जीवित रहताहै । ५।७७।४४

समस्तकलनोन्मुक्ते नकिञ्चिन्नामसूक्ष्मखे ।
ध्यानात्संविदि लीनायां प्राणस्पन्दो निरुद्ध्यते ।। ५।७८।२६

सब विकारों से उन्मुक्त, कुछ भी नाम नहोनेवाला सूक्ष्माकाश निर्विकल्प समाधिसे संवित् में लीन होने पर प्राणस्पन्द रुकजाता है ।
५।७८।२६

तस्मात्संविन्मये शुद्धे हृदये हृतवासनः ।
बलान्नियोजिते चित्ते प्राणस्पन्दो निरुद्ध्यते ।। ५।७८।३८

इसलिए संविन्मय शुद्ध हृदय में वासनाको हवन करके (लय करके) श्रद्धा, भक्ति, धैर्य, एकाग्रभाव से चित्त लगाने पर प्राणोंका स्पन्द (चलना) रुक जाता है । ५।७८।३८

ब्रह्मेदं बृंहिताकारं बृहद्बृहदवस्थितम् ।
ज्ञानादस्तमितद्वित्वं भवात्मैव त्वमात्मना ।। ५।७९।११

ज्ञान से द्वैतभाव रहित तू बृहत् से भी वृहत् आकारवाले ब्रह्म अपनी आत्मा में रहा जानो । अपनी आत्मा में ही माया से नटके समान बृंहित (वडा) आकारवाला यह दृश्य रहता है । ५।७९।११

नानात्वमस्ति कलनासु न वस्तुतोऽन्त–
र्नानाविधासु सरसीषु जलादि नान्यत् ।
इत्येकनिश्चयमयः पुरुषो विमुक्त
इत्युच्यते समवलोकित सम्यगर्थः ।। ५।७९।२०

कल्पना वा चिन्तनमात्रसे अनेक भेद माना गयाहै। वास्तवमें अन्तरात्मा आत्मासे अलग कुछ नहीहै। जैसे अनेक प्रकारके तालावमें तरङ्ग, फेन, बुद्‌बुद आदि अलग अलग कुछ भी नहीहैं। ऐसा एक आत्म तत्वका निश्चय करनेवाला पुरुष अच्छे विवेकसे अनुभव और सत्य अर्थका साक्षात्कार करके चित्तके आत्यन्तिक नाशद्वारा विमुक्त कहा-जाताहै। ५।७६।२०

व्यपगतमननं समाभिरामं
प्रकटितविश्वमविश्वमप्यनन्तम्।
स्वयमजमजरं गुणादतीतं
वपुरहमच्युतमीश्वरं नमामि॥ ५।८०।४६

मनके विकल्पसे परे, समएकरससे सुन्दर विश्वरूपमे प्रकट होनेवाले, वास्तवमे विश्वसे अलग अन्तरहित, अज अजर, गुणशून्य, ईश्वर रूप, अच्युत परमात्म स्वरूपको मैं नमस्कार करता हूँ। (एकी भावसे मिलता हूँ) ५।८०।४६

संशान्तवासनमनाश्रितचेतनांश-
मप्राणसंचरणमस्तमितांशदोषम्।
संवेद्यवर्जितमुपेत्य सुसंविदंशं
शाम्यामि मौनमहमेव निरीहमन्तः॥ ५।८३।४८

मैं अपने हृदयमें जडाशयरहित (उसके कारण अविद्याकाभी बाध होनेसे) वासनारहित (चिदाभासकाभी अलग अवस्थिति नहोनेसे) चिदाभासमे आश्रित नहोने वाले, (चिदाभासके अधीन क्रियाशक्ति काभी उपराम होनेसे) अंश कहेजानेवाले भेददोष रहित, एकरस चिन्मात्र संसारके बाध होनेपर परिशिष्ट होनेवाले, ब्रह्ममें प्राप्त होकर मनकी चेष्टारहित और वचनके व्यापार रहित मौन पूर्वक शान्त होता हूँ। (परब्रह्ममे विश्राम लेताहूँ) ५।८३।४८

यथास्थितेनैव चिदम्बरेण
स्वचित्तमेवैति मनोभिधानम्।
स्फारं कृतं तेन जगच्च दृश्य–
मेवं ततं नैव ततं च किञ्चित्॥ ५।८४।४४

अविकृत चिदाकाश स्वभावसेही किसी मायाद्वारा किञ्चित् (कुछ) स्फुरण जैसे होनेपर स्वयं चित्तमें प्राप्तहोने और उसीका बारम्वार चिन्तन होनेपर मन नाममें पहुचताहै। इसीसे स्थूल स्पष्ट कि हुइ जगके नामसे दृश्य संसार इसीतर फैलताहै। वास्तवमें कुछभी नही फैला है।

न बहिर्नान्तरे किञ्चित्संवेद्यं विद्यते पृथक् । ५।९१।६७॥

बाहर अथवा भीतर संवित् से अलग संवेद्य नहीं है । ५।९१।६७॥

संवित् स्फुरन्ती सङ्कल्पात् संवेद्यं पश्यति स्वतः। ५।९१।६८॥

स्फुरण होनेवाली संवित् संकल्पसे स्वयं संवेद्य (ज्ञेय विषय) देखता है । ५।९१।६८॥

स्वचमत्कारयोगेन संवेद्यं संविदस्तथा ।
स्ववेदनं स्वसङ्कल्पात्संविदो यत्र वर्तते ॥ ५।९१।६९

जिस त्रिवेकावस्था में स्वतत्त्वका संवेदन (ज्ञान) है वह संवेदन स्वसंकल्प से पैदा हुवा स्वप्नकी तरह है । अभेद ज्ञान में स्वसंवेदन अथवा विवेक विचार धारायें कुछ भी सम्भव नहीं होते हैं । ५।९१।६९

तदमलमजरं तदात्मतत्त्वं
तदवगतावुपशान्तिमेति चेतः ।
अवगतविततैकतत्स्वरूपो
भवभयमुक्तपदोऽसि तच्चिराय ॥ ५।९१।१२२

वह आत्मतत्व निर्मल, अजर पारमार्थिक है। उसके साक्षात्कार होनेपर चित्त शान्तिमे प्राप्त होताहै। तू जब व्यापक एक आत्मतत्वके स्वरूपको अनुभवकरो तवे तो फिर न लौट आनेसे संसारके भयसे मुक्त हुवा परम ब्रह्म अद्वितीय स्वरूपही हो अोगे ।५।६१।१२२

संवेद्यवर्जितमनुत्तममाद्यमेकं
संवित्पदं विकलनं कलयन् महात्मन् ।
हृद्येव तिष्ठ कलनारहितः क्रियां तु
कुर्वंन्नकर्तृपदमेत्य शमोदितश्रीः ।। ५।९२।५०

हेमहात्मा वाह्य और आन्तरिक विषय से रहित अत्यन्त उत्तम कारणरहित, आद्य (सवसे पहला) एक, विकल्प वासना विकारादि रहित, ज्ञान पदका ध्यान करता हुवा चित्तके वाहर उन्मुख होनेसे हटकर (निरोधशील होता हुआ) हृदयाकाशमें तो यथोचित क्रिया करते रहने पर भी आसक्तिको शमनद्वारा (आत्म बोधमें रहकर) जीवन्मुक्तिका गुण वा श्री उदित होता हुआ मैं करने वाला हूँ ऐसे कर्तृपनमें प्राप्त नहोकर रहो। ५।९२।५०

विचारोत्थात्मविज्ञानं ज्ञानमङ्ग विदुर्बुधाः ।
ज्ञेयं तस्यान्तरेवास्ति माधुर्यं पयसो यथा ।। ५।९३।२१

विचारसे पैदा हुवा आत्मविज्ञानको विद्वान्लोग ज्ञान कहते हैं। दूधके भीतर रहाहुवा मीठापन के समान ज्ञानके भीतर ही ज्ञेय स्थित है। ५।९३।२१

सम्यग्ज्ञानसमालोकः पुमान्ज्ञेयमयः स्वयम् । ५।९३।२२।।

सम्यग् ज्ञानसे युक्त, स्वयं ज्ञेय हुवा पुरुष सदा ब्रह्मानन्दका अनुभव करता है। ५।६३।२२॥

यन्नास्ति तस्य सद्भावप्रतिपत्तिरुदाहृता।
मायेति सा परिज्ञानादेव नश्यत्यसंशयम्॥ ६।१-३।२०

जो वस्तु नहीं है वह वस्तु "है" स्वीकार करना माया है। यह माया ज्ञान से नष्ट होती है। अहंकार के तत्त्व अज्ञान है। स्वात्मज्ञानसे अहङ्कार नष्ट होता है। ६।१–३।२०

ब्रह्म ब्रह्मणि बृंहाभिर्ब्रह्मशक्त्यैव बृंहति। ६।१-११।२०॥

ब्रह्म ब्रह्म शक्तिसे भी वृहत् (वडा) होता है। ६।१–११।२

शक्तिर्निर्हेतुकैवान्तः स्फुरति स्फटिकांशुवत्।
जगच्छक्त्यात्मनात्मैव ब्रह्म स्वात्मनि संस्थितम्॥ ६।१-११।३७

कारण नहोने पर भी आत्मशक्ति स्फटिक के प्रकाश समान भीतर स्फुरण होती है। शक्तिद्वारा जगत् देखाजाता है। अपने में स्थित आत्मा ही ब्रह्म है। ६।१–११।३७

प्राणापानरथारूढं प्राणापानमनाततम्।
यच्छक्तिरूपं शक्तीनां तच्चित्तत्त्वमुपास्महे॥ ६।१-२५।७१

जो शक्ति प्राण अपान रूप उपाधिरथमे चढकर प्राण अपान शक्ति होती है उस चित्तत्त्वकी उपासना करते हैं। ६।१।२५।७१

आत्मा प्रकाशरूपो हि नित्यः सर्वगतो विभुः ।६।१-२६।६४।।

आत्मा प्रकाश रूप, नित्य सवोमें रहने वाला सर्व शक्तिमान्, व्यापक, नित्य है । ६।१।२६।६४।

अकृत्रिममनाद्यन्तं देवनं देव उच्यते । ६।१-२६।१२१।।

स्वाभाविक, आदि अन्तरहित निरतिशयानन्द स्वप्रकाशको चित्-देव कहते हैं । ६।१।२६।१२१।।

अकृत्रिममनाद्यन्तं देवनं चिच्छिवं विदुः । ६।१-२६।१२२।।

क्रियासे असाध्य आदि अन्तरहित निरतिशयानन्द रूप चित्प्रकाश को "देव" कहते हैं। ६।१—२६।१२२।

आत्मैव देवो भगवाञ्छिवः परमकारणम् । ६।१-२६।१३१।।

क्रियासे साध्य न होनेवाला आदि अन्तरहित निरतिशयानन्दरूप चित्प्रकाशको "शिव" कहते हैं । ६।१।२६।१३१।।

त्वमेतच्चेतनाकाशमात्मानं जीवमव्ययम् ।
स्वभावं विद्धि न त्वन्यः पूज्यः पूजात्मपूजनम् ।।६।१-२६।१३२

तू यह चेतन आकाश स्वरूप (चिदाकाश) आत्मा कोही कभीभि नाश नहोनेवाला जीव और सत्य भाव समझो । इससे अलग दूसरा पूज्य नहीहै । पूजाही अपने आत्माकी पूजा (ध्यान) करना । ६।१।२६।१३२।।

चिदस्ति हि शरीरेह सर्वभूतमयात्मिका ।
चलोन्मुखात्मिकैका तु निर्विकल्पा परा स्मृता ।। ६।१-३०।६७

शरीर में सर्व भूतमय स्वरूप चित् शक्ति है । यह व्यष्ठि और समष्टिरूपी बुद्धिमें आसक्त स्वभाव (विज्ञान शब्दसे कहेजानेवाले कर्ता और भोक्ता स्वभाव एक, दूसरा कूटस्थ साक्षी निर्विकल्प है ।
६।१–३०।६७

क्रियोन्मुखत्वं सङ्कल्पात्सङ्कल्पो मननक्रमः ।
मननं चित्तकालुष्यमात्माचिन्निर्मला भवेत् ।। ६।१-३१।३५

संकल्पसे क्रिया में उन्मुखत्व होता है । (संकल्पसे लोग कार्य में प्रवृत्त होते हैं) संकल्प मनन क्रम है । मनन चित्तकालुष्य है । आत्म-स्वरूप चित् निर्मल है । अर्थात् कर्मेन्द्रियकी प्रवृत्ति में कारण संकल्प-स्वरूप मनोवृत्ति और उसके मालिन्य के साक्षी आत्मचित् को विचार करना चाहिये । ६।१–३१।३५

सर्वशक्तिमयो ह्यात्मा यद्यथा भावयत्यलम् ।
तत्तथा पश्यति तदा स्वसङ्कल्पविजृम्भितम्।। ६।१-३३।४१

आत्मा सर्वशक्तिमय है । जो जैसी भावना करता है अपने संकल्पसे बढा हुवा वह वैसेही देखता है । ६।१–३३।४१

सर्वगापि चिदुच्छूनबोधात्स्पन्दादिकं प्रति ।
बोधात्कलंकविमला चिदेव परमं शिवम् ।। ६।१-३५।१३

सव में रही हुई चित् शक्ति वाह्याकार बोध(ज्ञान) से देह तथा घटादि ओंके स्पन्दमें समर्थ होती है । ब्रह्माकारके ज्ञानसे मायारूप कलङ्कको त्यागकर स्वयं ही परम कल्याण कैवल्य पद में रहता है ।
६।१।३५।१३

एतदेव परं ध्यानं पूजैषैव परा स्मृता । ६।१-३८।२५।।

यह ही (अत्मचिन्तनकरनाही) पर ध्यान और पर पूजा कहागया है ।
६।१।३८।२५।।

यदनारतमन्तस्थशुद्धचिन्मात्रवेदनम् । ६।१-३८।२६।।

जो आसक्तिरहित सदा आभ्यन्तरिक शुद्ध चैतन्य ज्ञान करना है । (यही आत्मपूजन है)
६।१।३८।२६।।

समताकाशवद्भूत्वा यत्तु स्याल्लीनमानसम् ।
अविकारमनायासं तदेवार्चनमुच्यते ।। ६।१-३९।५८

आकाशकी तरह समभाव होकर जो विकार रहित किसी प्रकारके प्रयास रहित आत्मामें मन लीनकरताहै । वही हि पूजा कहीजाती है ।
६।१।३९।५८।।

आवर्तः सलिलस्येव यः स्पन्दस्त्वयमात्मनः ।
प्रोक्तः प्रकृतिशब्देन तेनैवेह स एव हि ।। ६।१-४६।३०

जो यह जलका आवर्त (भुमरी) की तरह आत्माका स्पन्द है उसीको प्रकृति कहते हैं। अतः वह वही है। ६।१–४६।३०

चित्त्वजाड्यात्मकं चित्तं दृढं भावयति स्वयम् ।
यथा यदैव यद्भावं तथा भवति तत्तदा ।।६।१-५१।३८

चित्त्व और जाड्यात्मकवाला चित्त आपही दृढ भावना करता है। जिस समय चित्त देवता, मनुष्य, स्थावर इत्यादि जैसी भावना करता है उसवक्त वही भावना अनुभव करता है। ६।१।५१।३८

चितः स्वकलनात्तस्य देहोग्र इव तिष्ठति ।
पञ्चात्मा भावितोऽसत्यो महायक्षः शिशोरिव ।। ६।१-५१।४६

भावना किया हुवा महान् भूत बालक सम्मने जैसे खडा होताहै वैसेही स्वयं कल्पना रूपी वासनासे वह चिद्रूप जीवके सामने असत्य पञ्चमहाभूतसे भावित शरीर(वासनाके अन्त नहोतक) रहताहै।
६।१।५१४६

मनो बुद्धिरहङ्कारस्तथा तन्मात्रपञ्चकम् ।
इति पुर्यष्टकं प्रोक्तं देहोऽसावातिवाहिकः।। ६।१-५१।५०

मन, बुद्धि अहङ्कार और पञ्चतन्मात्रा ये पुर्यष्टक कहे जाते हैं। यह देह आति वाहिक (सूक्ष्म) है ६।१।५१।५०

बोधो जीवः प्रबोधोऽयं स तु बुद्धिप्रयत्नतः । ६।१-५१।६०।।

जीव बोध तथा प्रबोधस्वरूप है । (उत्कृष्ट चिन्मात्र ब्रह्मरूप है) वह बुद्धिके प्रयत्नसे होता है । ६।१-५१।६०।।

यत्संवेद्यविनिर्मुक्तं संवेदनमनिर्मितम् ।
चेत्यमुक्तं चिदाभासं तद्विद्धि परमं पदम् ।। ६।१-५९।४

जो संवेद्यसे मुक्त हुवा स्वतन्त्र संवेदन तथा चेत्यसे मुक्त चिदाभास है उसको परम पद जानना । दो प्रकारके चिदात्मिका रूप विवेकियो नें अनुभव किया हैं । चित्तवृत्ति में प्रतिविम्बित चेत्यार्थरूप चित्तसे निर्मित एक चिदात्मा । दूसरा सभी अवस्था में साक्षीरूपसे स्थित नित्य सिद्ध संविद्रूप । वे दोनों ही रूप, चेत्य (ज्ञान से संवेद्य) जानने योग्य ( त्रिपुटी ) ज्ञाता–जाननेवाला, ज्ञान–ज्ञानकरना, ज्ञेय–जाननेयोग्य वस्तु) से मुक्त हुवा तो वह परमपद ब्रह्म ही हुवा जानना । ६।१–५९।४

आत्मनात्मनि शान्तैव चिच्चमत्कुरुते चिति ।
चित्प्रस्पन्दो हि संसारस्तदस्पन्दः परमं पदम् ।। ६।१-५९।२१

कान्त चित् से ही अपने में आप कल्पना रूपी चमत्कार करता है । चित्का स्फुरण होना, निश्चय ही संसार है । उसका स्फुरण नहोना परम ब्रह्मपद है । ६।१–५९।२१

चित्तेज एव चित्स्पन्द इति बुद्धे निरन्तरम् । ६।१-५९।४६।।

चित्प्रकाश ही चित्स्पन्द है ऐसा जानने पर संसार क्षीण होता है ।
६।१–५९।४६।।

व्यतिरिक्तश्चित: स्पन्दो न किञ्चिदवशिष्यते । ६।१-५६।४७।।

चित्प्रकाशसे अतिरिक्त दूसरा स्पन्द नहीं है। ६।१–५६।४७।।

या परा शक्तिः स्फुरति वीणावेगलसद्गतिः । ६।१-८०।४१।।

वीणा के झङ्कार की तरह परा शक्ति स्फुरण होती है।
६।१–८०।४१।।

सा चोक्ता कुण्डलीनाम्ना कुण्डलाकारवाहिनी।
प्राणिनां परमा शक्तिः सर्वशक्तिजवप्रदा ।। ६।१-८०।४२

वह कुण्डली नाम कियी हुवी, कुण्डलाकार में प्रवृत्त हो रही, प्राणी के सर्वशक्तिका वेग देनेवालीको परमशक्ति कहते हैं। ६।१–८०।४२

सान्तः कुण्डलिनीस्पन्दस्पर्शसंवित्कलामला ।
कलोक्ता कलनेनाशु कथिता चेतनेन चित् ।। ६।१-८१।२

जीवनाज्जीवतां याता मननाच्च मनः स्थिता ।
सङ्कल्पाच्चैव सङ्कल्पा बोधाद्बुद्धिरिति स्मृता ।। ६।१-८१।३

वह मलरहित कुण्डलिनी प्राण रूप से भीतर मारुत धर्मसे और स्वधर्म से भी स्पन्द स्पर्श संवित् ये तीन रूप की कल्पना होकर कलन (क्रिया) करने से कला कहा गया, चेतन देने से ,चित् बताया गया, मनन करने से मन कहा गया, सङ्कल्प करने से संकल्प, ज्ञान करने से बुद्धि कहा गया, अहङ्कार करने से अङ्ककार हुआ, ये पुर्यष्टक नाम कि हुई कुण्डलिनी शरीर में उत्तम जीव शक्ति होकर स्थित है।

६।१–८१।२–३–४

स्वरूपे निर्मले सत्ये निमेषमपि विस्मृते।

६।१–८५।१११॥

दृश्य मुल्लासमाप्नोति प्रावृषीव पयोधरः। ६।१–८५।११२॥

निर्मल, सत्य, अपना स्वरूप एक क्षण मात्र भी वि स्मरण होने पर वर्षा ऋतु मे मेघ के समान दृश्य दिखलाई देता हे।

६।१–८५।१११॥–११२॥

अनारतानुसन्धानादप्युन्मेषमविस्मृते।
स्वरूपे नोल्लसत्येष चित्ते दृश्यपिशाचकः

६।१-८५।११२॥

६।१ ८५।११३॥

हर बखत समाधि से अपना स्वरूप एक क्षण भी नभूलने पर यह दृश्यरूपी पिशाच चित्त में नहीं दिखलाई देता है।

६।१–८५।११२॥–११३॥

अहङ्कारात्मतां याता सैषा पुर्यंष्टकाभिधा ।
स्थिता कुण्डलिनी देहे जीवशक्तिरनुत्तमा ।। ६।१-८१।४

प्राणरूपसे भीतर स्फुरण होती हुई कुण्डलिनी मारुत धर्मसे और स्वधर्मसे भी स्पन्द स्पर्श संवित् ये तीन कल्पित नाम होकर स्पन्द-कला-चित्-जीव-मन-संकल्प-बुद्धि-अहंकार ये आठ पुर्यंष्टक शरीर में उत्तम जीवशक्ति होकर रहती है। ६।१–८१।११।

स्वरूपे निर्मले सत्ये निमेषमपि विस्मृते । ६।१-८५।१११।।
दृश्यमुल्लासमाप्नोति प्रावृषीव पयोधरः । ६।१-८५।११२

तत्त्व जाननेवालों को निर्मल, सत्य अपना स्वरूप विस्मरण होनेपर वर्षाऋतु में मेघके समान दृश्य दीख पाता है। ६।१।८५।११२

अनारतानुसंधानादप्युन्मेषमविस्मृते ।। ६।१-८५।११२

स्वरूपे नोल्लसत्येष चित्ते दृश्यपिशाचकः । ६।१-८५।११३।।

हरहमेशा समाधिसे अपनास्वरूप क्षणभर भी न भूलने पर यह दृश्य पिशाच चित्त में नही देखाजाता है। ६।१–८५।११३।।

चिन्मात्रममलं शान्तमाभातं परमं नभः ।
समस्तकलनोन्मुक्तं युक्तं परमया धिया ॥ ६।१-९६।१२

चिन्मात्र-निर्मल, शान्त, सवओर प्रकाशमान, परमाकाश स्वरूप (शून्य) सव विषयोंसे छुटा हुवा, साक्षात्कार बुद्धिसे युक्त हुवा है ।
६।१।९६।१२

यदेकोदितमत्यच्छं शान्तमाततमुज्ज्वलम् ।
परमात्मात्मकं तेजस्तिमितं ज्ञप्तिमात्रकम् ॥ ६।१-९६।१३

जो एक, सदा उदित, अति निर्मल, शान्त, व्यापक, उज्वल परमात्म स्वरूप ज्ञप्ति मात्र है । ६।१–९६।१३

अप्रतर्क्यमविज्ञेयं समं शिवमनिन्दितम् ।
ब्रह्मनिर्वाणमापूर्णमापूर्णोदितसंविदा ॥ ६।१-९६।१४

तर्क नकिए जान बाले, एवं ज्ञान जानने अयोग्य, सम, कल्पन कल्याण स्वरूप, अनिन्दित, सब ओर पूर्ण उदित, स्वबोध से पूर्ण उपाधि शून्य निर्वाण ब्रह्म है । ६।१–९६।१४

सर्वं सर्वात्मकं सूक्ष्ममच्छानुभवमात्रकम् । ६।१-९६।२७॥

सब स्वच्छ अनुभव स्वरूप मात्र वाला, सूक्ष्म, सर्व स्वरूप ब्रह्म है ।



६।१–९६।२७

अकर्तृकर्मकरणं सत्यं चिद्घनमक्षतम् ।
आत्मरूपमनाभासं स्वयं वेदनमक्षतम् । ६।१-९६।३०

अकर्तृक एवं कर्म नकरनेवाला, सत्य, अक्षत, चिद्घन, आभास (भ्रम) रहित किसी समय में भी नाश नहोनेवाला आत्मरूप ज्ञान है ।
६।१-९६।३०

स्वयमेवात्मनैवात्मा शक्ति सङ्कल्पनामिकाम् ।
यदा करोति स्फुरतां स्पन्दशक्तिमिवानलः ।। ६।१-११४।१५

अग्निसे स्पन्दशक्तिकी तरह स्वयं प्रकाशमान आत्मासे आप ही संकल्प नाम कियाहुवा शक्ति जब स्फुरण करता है तब ।
६।१-११४।१५

तदा पृथगिवाभासं सङ्कल्पकलनामयम् ।
मनो भवति विश्वात्मा भावयन् स्वाकृतिं स्वयम् ।। ६।१-११४।१६

पृथक् कि तरह आभास हुआ सङ्कल्पकलनामय प्राप्त हुआ मन अपनी आकृति आप ही भावना करके विश्वात्मा होता है
६।१-११४।१६

दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया। ६।१-११८।४।।

सत्त्वगुण में स्थित बुद्धिसे अपनी आत्मा को आप ही देखता है ।
६।१-११८।४

स्वप्रकाशं स्वमात्मानमवलम्ब्याविलम्बितम् ।
आस्स्व संपूरिताकाशं जगन्ति नृप पश्य हे ।। ६।१-१२।१६

हे राजन्! स्वप्रकाशरूप आप आत्म स्वरूप की भावना करके निरन्तर रहो । जगत्‌की सभी तरहकी सभी तरह से पूर्ण ढकनेवाला चिदाकाशको ही देखो । ६।१-१२।१६

यदैवैवं चितो रूपं ततं बुद्धमखण्डितम् ।
तदैव तीर्णः संसारः परमेश्वरतां गतः ।। ६।१-१२।१७

जब इस तरह अखण्डित पूर्ण चित्‌का रूप जानता है तब संसार से पार होकर परमेश्वर भाव में पहुँचता है । ६।१-१२।१७

आद्यन्तरहितं सत्यं चिन्मात्रं निर्विकल्पकम् । ६।१-१२४।२०।।

आदि और अन्तरहित, सत्य चिन्मात्र आत्मा विकल्परहित है । ६।१-१२४।२०।।

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ।। ६।१-१२५।१

सब द्वैत भावको हटाना श्रुति, स्मृति पुराणादि अध्यात्मशास्त्रका परम सिद्धान्त है । स्वप्रकाश आत्मा में अविद्या, माया नहीं है । यह शान्त क्रमरहित ब्रह्मस्वरूप आत्मा है । ६।१-१२५।१

निर्वाणवान्निर्मननः क्षीणचित्तः प्रशान्तधीः ।
६।१-१२५।४।।

मनरहित, शान्तबुद्धि और चित्तक्षीणवाला, आदमी निर्वाण पदसे युक्त होता है । ६।१-१२५।४।।

आत्मन्येवास्स्व शान्तात्मा मूकान्धबधिरोपमः ।
नित्यमन्तर्मुखो भूत्वा स्वात्मनान्तः प्रपूर्णधीः ।।
६।१-१२५।५

वचन, नेत्र और कानके व्यापार रहित गूँगा, अन्धा और हीरा जैसे होकर सदा आत्मामें ही अन्तर्मुख होते हुए अपने हृदयसे भीतर परिपूर्ण आत्माकार बुद्धि शान्त होते हुए आत्मामें रहो ।६।१-१२५।५

वासना भूतसूक्ष्माश्च कर्माविद्ये तथैव च ।
दशेन्द्रियमनोबुद्धिरेतल्लिङ्गं विदुर्बुधाः ।। ६।१-१२८।१८

वासना, पञ्चीकरण में अप्राप्त पञ्च सूक्ष्म महाभूत, कर्म, अविद्या, दशों इन्द्रिय मन और बुद्धि इनको सूक्ष्म शरीर (लिङ्ग शरीर) कहते हैं । ६।१-१२८।१८

आनुलोम्यात्स्मृता सृष्टिः प्रातिलोम्येन संहृतिः ।
अतः स्थानत्रयं त्यक्त्वा तुरीयं पदमव्ययम्।। ६।१-१२८।२४

आकाशादि सीधे क्रमसे सृष्टि माना गया हैं । सृष्टि के विपरीत क्रम से संहार माना गया है । अतः विराट् हिरण्य गर्भ और अव्याकृत नाम के स्थूल, सूक्ष्म और कारणरूप समष्टि जाग्रत्, स्वप्न और सुषुप्ति यं तीन अवस्थाको छोडकर सबोंका अधिष्ठान परिशिष्ट (बचा हुआ) चित्मात्रैकरस तुरीय अविनाशिपदका ध्यान करे । अद्वैत चतुर्थ पदकी प्राप्ति के लिए किया हुआ ध्यान से परिपक्व चरम (अन्तिम) साक्षात्कार वृत्ति से ध्यान के कर्ता और करण रूप लिङ्ग शरीर और शरीरी को भी मूल अज्ञानको बाँधकर के लीन करके घटटुटने पर घटाकाश महाकाश में मिलने की तरह परम निरतिशयानन्द ब्रह्म में ही मिले 'लीन होवे एक होवे) ६।१-१२८।२४-२५।।

ध्यायेत्तत्प्राप्तये लिङ्गं प्रविलाप्य परं विशेत् ।
६।१-१२८।२५।।

केवलं सत्यसङ्कल्पं शुद्धं ब्रह्मास्म्यहं परम् । ६।१-१२८।३६।।

केवल सत्य सङ्कल्पद्वारा जगत्की उत्पत्ति करनेवाला मैं परब्रह्म हूँ । ६।१।१२८।३६।।

अद्वितीयं परं ज्योतिर्ब्रह्मास्म्यानन्दमव्ययम् । ६।१-१२८।३७।।

द्वैतरहित, परम ज्योति, आनन्दरूप और कभी भी नाश नहोनेवाला ब्रह्म मैं हूँ । ६।१-१२८।३७।।

संविन्मात्रं विदुर्जन्तुं तस्य प्रसरणं जगत् ।
आत्मनिष्ठत्वमजगत्परमेत्युपदेशभूः ।। ६।२-२२।५०

जन्तु संविन्मात्र है । उनके प्रसार जगत् है । आत्म ज्ञान में रहने पर जगत् नहीं रहता है । यह परम रहस्य उपदेशका भूमिका क्रम है । ६।२–२२।५०

प्राणी संविन्मात्र है । उसका प्रसार जगत् है । आत्मज्ञान होनेके वाद जगत् नहीं रहता है । यह रहस्य उपदेश है । ६।२–२२।५०

चितश्चेत्योन्मुखत्वं यत्तच्चित्तं सैव संसृतिः ।
सेच्छा तन्मुक्तता मुक्तिर्युक्ति ज्ञात्वेति शाम्यताम्।।६।२-३७।५१

चिदात्माका वाह्य विषय में उन्मुख होकर इच्छा होना ही चित्त और संसार है । वाह्य विषयसे मुक्त होना ही मुक्ति है । यह युक्ति जानकर शान्त हो । ६।२–३७।५१

ज्ञप्तिमात्रादृते शुद्धादादिमध्यान्तवर्जितात् ।
नान्यदस्तीह निर्णीतं महाचिन्मात्ररूपिणः ।। ६।२-४२।६

आदि अन्त रहित शुद्ध, चित्मात्रस्वरूप ज्ञप्तिसे अलग दूसरा कुछ नहीं है । ६।२–४२।६

प्रतिभात्मैव भारूपो भाति सर्गो महाचिति । ६।२-४२।२३।।

महा चित् में तेजरूप प्रतिभास्वरूप ही सृष्टि रूपसे प्रकाश होता है । ६।२–४२।२३।।

प्रतिभामात्रमेवाच्छं नतु ज्ञप्तेर्घटादि सत् । ६।२-४२।३६।।

प्रतिभामात्र ही निर्मल ब्रह्म है । ज्ञप्तिसे अलग घटादि सत् नहीं है । ६।५-४२।३६।।

ज्ञानात्मिकैव प्रतिभा ज्ञप्तिरेवाखिलं जगत् ।
ज्ञप्तिरप्यात्मतत्त्वश्री: परिज्ञातोपशाम्यति ।। ६।२-४२।४०

प्रतिभा ज्ञानस्वरूप है । सव जगत् ज्ञप्ति ही है । ज्ञप्ति भी आत्म-तत्त्व है । उसका ज्ञान होनेपर भेदक उपाधि नष्ट हो के ज्ञप्ति भी शान्त होती है । ६।२-४२।४०

महाबोधमयैकात्मा स्वात्मैव परमेश्वर: । ६।२-४८।२२।।

महाबोध (ज्ञान) मय एक स्वात्मा ही परमेश्वर है ।
६।२-४८।२२।।

यदस्पन्दि मनोरूपं रूपं तस्य पदस्य तत् । ६।२-५३।१२।।

(समाधि में आरूढ योगी के) मनका रूप जव नहीं चलता है उस परम पदका वही रूप है । ६।२-५३।१२।।

बोध एव कचत्यर्थरूपेण स च खादणु: ।
दृष्टान्तोऽत्रानुभूतोऽन्त: स्वप्नसङ्कल्पपर्वत:।। ६।२-५४।१८

अविद्यमान विषयों में भी ज्ञान विषयरूपसे प्रकाश होता है । वह विषय शून्य से भी शून्य है । मनसे स्वप्न में कल्पना कियागया पर्वत इस में दृष्टान्त अनुभूत है । ६।२-५४।१८

सर्वशक्त्यात्म तद्ब्रह्म यथा कचति यादृशम् ।
रूपमत्यजदेवाच्छं तथा भवति तादृशम् ।। ६।२–५७।२१

सर्वशक्ति स्वरूप वह ब्रह्म जैसे जिस प्रकार प्रकाश होता है अपने रूप न छोडकर निर्मल वैसे वही प्रकाश होता है। ६।२।५७।२१

इति मायेव दुष्पारा चिच्छक्तिः परिजृम्भते ।
इत्थमाद्यन्तरहिता ब्राह्मी शक्तिरनामया ।। ६।२–७०।१८

अविद्या (माया) वाली चित् शक्ति इन्द्रजाल की माया की तरह स्फुरण होती है। ऐसी आदि अन्तरहित माया शून्य ब्राह्मी शक्ति है। ६।२–७०।१८

अनन्यां तस्य तां विद्धि स्पन्दशक्तिं मनोमयीम्।६।२–८४।२।।

चलस्वभाववाला रजोगुण के प्राधान्यसे स्पन्दशक्ति, सत्त्वगुण के प्राधान्य से सब ओर चित्प्रतिबिम्ब व्याप्त होने से, तथा जगत्के संस्कार होने से भी विकल्प हेतुसे मन साम्य होनेपर मनोमयी तादात्माध्यास और उसके अधीन सत्ता स्फूर्ति होने से वह चिदाकाश शिव की अनन्य माया जानना। ६।२–८४।२।।

तत्स्पन्दमायाशक्त्यैव लक्ष्यते नान्यथा किल । ६।२–८४।५।।

शिवकी स्पन्दरूप माया शक्ति द्वारा ही जानी जाती है। दूसरे प्रकार से निश्चयही नही जाना जाता है। ६।२–८४।५।।

स्पन्दशक्तिस्तदिच्छेदं दृश्याभासं तनोति सा। ६।२–८४।६॥

शिवकी इच्छारूप स्पन्द शक्ति यह दृश्याभास जगत् की सृष्टि करती है। ६।२–८४।६॥

स्पन्दमात्रात्मिका सेच्छा चिच्छक्तिः पारमेश्वरी।
६।२–८५।१६॥

परमेश्वर की स्पन्दमात्र स्वरूप इच्छा चित् शक्ति है।
६।२–८५।१६॥

चितिः शिवेच्छा सा देवं तमेवासाद्य शाम्यति। ६।२–८५।२१॥

शिवकी वहइच्छा रूप चित्शक्ति ही शिवको पाकर शान्त होती है।
६।२–८५।२१

यस्तु ज्ञानप्रबुद्धात्मा देहस्तस्याधिभौतिकः।
शाम्यत्युदेति विमलो बोधात्मैवातिवाहिकः॥ ६।२–९१।५३

ज्ञान के उदयसे स्थूल व्यष्टि और समष्टि देहका आधिभौतिक-वाद शान्त होता है। वह देह स्वच्छ बोधरूप आतिवाहिक (सूक्ष्मरूप) होकर उदित होता है –प्रकाशित होता है।

आतिवाहिकदेहेन तेन बोधात्मनाणुना।
बृहता वा यथा कामं निर्वाणात्मावतिष्ठते॥ ६।२–९१।५४

वोधस्वरूप वह आतिवाहिक देह सूक्ष्म वा वृहत् होनेपर भी इच्छाके अनुरूप निर्वाण (मोक्ष) रूप होकर रहता है। ६।२–६१।५३

मुकुरेऽन्तर्यथा बिम्बाद्बिम्बं भाति जगत्तथा।
चिद्व्योमनि स्वतो भातमबिम्बादेव बिम्बितम्॥
६।२–६६।४४

जैसे सीसे के भीतर वाहर के प्रतिविंम्वके कारण से झूठा ही प्रतिविम्व प्रकाशित होता है, वैसे ही चैतन्याकाश में आप ही वाहरी विम्व न होकर जगत् (झूठ ही) प्रतिविम्वित होकर प्रकाशित है (सीसेसे चिदाकाश में यही विशेष है।) ६।२–६६।४५

मुकुरेऽन्तर्यथा बिम्बं नदृष्टमपि किञ्चन।
तथा चिद्व्योमगं विश्वं न दृष्टमपि किञ्चन॥ ६।२–६६।४५

जैसे आइने के भीतर विम्व दिखने पर भी वास्तव में कुछ नहीं है वैसे चिदाकाश में रहा हुआ विश्व दिखलाई देने पर भी वास्तव में कुछ नहीं है। यही अंशको लेकर आइनेका दृष्टान्त दिया है) ६।२–६६।४५

पुरुषो न शरीरादि न च चित्तादि किञ्चन।
पुरुषश्चेतनं नाम न स नश्यति कर्हिचित्॥ ६।२–१०२।५६

पुरुष शरीरादि नहीं है। कुछ चित्तादि भी नहीं है। पुरुष चेतन है। वह चेतन पुरुष कभी नाश नहीं होता है। ६।२–१०२।५६

समस्तमननत्यागे योऽसि सोऽसि निरामयः ।
बहिरन्तरनन्तात्मा सुस्थितोऽपि निरन्तरम् ।। ६।२–१४२।२२

सब मनकी वृत्ति त्यागकर देखने पर जो है वह माया रहित बाहर भीतर अनन्तात्मा निरन्तर स्थिर अद्वय है । ६।२–१४२।२२

ज्ञानं यदेव तज्ज्ञेयं ज्ञेयस्यासंभवात्पृथक् ।
यथा ज्ञानमतो ज्ञेयं तनोत्यात्मानमात्मना ।। ६।२–१४३।५५

ज्ञान से ज्ञेय अलग नहोने से जो ज्ञान है वही ज्ञेय है । इसलिए ज्ञान से ही ज्ञानाश्रय ज्ञेय स्वरूप अपनेको आपही प्रसार करता है, सृष्टि करता है । ६।२–१४३।५५

सन्मात्रमात्रानुविधमच्छानुभवमात्रकम् ।
चिन्मात्रं भानमात्रात्म सर्वार्थात्मार्थवर्जितम् ।। ६।२–१४३।७९

सत् मात्र एक स्वरूपका अनुसरण करनेवाला, निलर्म अनुभव स्वरूप, चैतन्य मात्र रूप, ज्ञान मात्र स्वरूप, समस्त स्वरूप हुआ और विषय से रहित ब्रह्म है । ६।२–१४३।७९

तत्सत्तासंनिवेशात्म कारणानन्यखात्म च ।
चिद्भानमात्रमव्यग्रं खमेवाप्रतिघं जगत् ।। ६।२–१५९।५५

ब्रह्मसत्ताके संनिवेशस्वरूप दूसरे कारणसे न होनेसे चिदाकाश है। चित् के भान मात्र असंलग्न है । निर्बाध आकाश (चिदाकाश)-ही जगत् है । ६।२–१५९।५५

यैव चिद्भा जगत्सैव नैकतात्र न च द्विता । ६।२–१५६।५८।।

जो चित्भान है वही जगत् है। इस में न एकता है न द्विता (दोपना) ही है।

भवत्याकाश एवैषा दृश्यश्रीर्गगनात्मिका ।
अनन्यदृष्टा चिद्रूपा स्वप्नवत्स्वात्मद्रष्टृका ।। ६।२–१५६।६५

यह दृश्य श्री आकाश ही है। वास्तविक विषय न होनेसे प्रतीति मात्र होनेवाला स्वप्नकी तरह दूसरेसे न देखेजानेवाली स्वयं आत्मा द्रष्टा चिद्रूप मात्र है ६।२–१५६।५८।।

एषा हि संपरिज्ञाता तिष्ठत्यपि यथास्थितम् ।
भामात्ररूपनिर्वाणा निशान्ताऽप्रतिभाकृतिः ।। ६।२-१५६।६६

यह आत्मा द्रष्टृस्वरूप चिदाकाश स्वरूपसे जाननेपर निर्वाण (मुक्त-स्वच्छ) उजियाला होनेपर अन्धकार न दिखलाइ देनेके समान यथास्थित स्वरूप प्रकाश ही रहता है। ८।२–१५६।६६

शान्ताशेषविशेषात्म यथास्थितमवस्थितम् ।
सदसद्वा जगज्जालं परिज्ञानेन शाम्यति ।। ६।२–१५६।६७

सब विशेष रूप शान्त होनेकेबाद यथास्थित (जैसाका वैसा) सत् या असत् जगज्जाल ज्ञान द्वारा शान्त होता है। ६।२–१५६।६७

सदंशो बोध तद्ग्राह्यमय एव यथा तथा ।
द्रष्टा य एव दृश्यं तद्द्वैतवेदनमेककम् ।। ६।२–१६१।४३

जैसे ब्रह्मके सच्चिदानन्द अंशमें सत् अंश बोधमय और बोधसे ग्राह्य भी है एवं अभिन्न भी है वैसे ही जो विषय दृश्य और वह देखने वाला .द्रष्टा वही दृश्य है । उन दोनों को एक ही समझना ज्ञान है । क्यों कि द्रष्टा और दृश्य, विषय-विषयी भाव को चित्तादात्म्यसे अलग दूसरा कोई निरूपण नहीं करसकता । ६।२–१६१।४३

शाम्यत्यशान्तमेवेदं स्थितमेव विलीयते ।
दृश्यं तत्त्वपरिज्ञानाद्दृश्यमानं न दृश्यते ।। ६।२–१६२।२६

यह दृश्य शान्त न होकर ही शान्त होता है। रहकर ही लीन होता है । तत्त्वज्ञानसे दिखलाई पडने पर भी दिखाई जानेवाली वस्तु दूसरेसे नहीं दिखलाई देती है । ६।२–१६२।२६

तथानुभूयमानापि सर्गसंवेदनाम्बरे ।
चिन्मये तत्त्वविज्ञानाच्छून्यतैवावशिष्यते ।। ६।२-१६२।२८

वैसा अनुभव कियेजानेवाले चित्ताकाशमें सृष्टि ज्ञान तत्त्वज्ञानसे चिन्मयाकाश में शून्यता मात्र बच जाती है । समझता है ६।२–१६२।२८

अनुभवितैवानुभवनं सत्यं स्वात्मानमप्यसन्तमिव ।
अनुभवतीयत्त्वेन स्वप्ननटः स्वप्नदेशमिव ।। ६।२-१७३।३३

(ज्ञानहोने पर) अनुभवकरनेवालाही अनुभवके रूपमे रहताहै (फरकनही होताहै) स्वप्नके नटसे स्वप्नके असत् देशका अनुभवकी तरह अज्ञानावस्थामे सत्यअपनेको भी असत् के नाई यह इतना है कहकर टुकडेका भान करता है । ६।२-१७३।३३

अत्यन्तासंभवं दृश्यं यद्वै निर्वाणमासितम् ।
शुद्धबोधोदयं शान्तं तद्विद्धि परमं पदम् ।। ६।२-१७४।२१

जो निर्वाण दृश्य के लिए अत्यन्त असंभव है वही शुद्ध ज्ञानके उदय से, शान्त स्वरूप परम पद जानना । ६।२-१७४।२१

सम्यग्ज्ञानवतो ज्ञस्य यथाभूतार्थदर्शिनः ।
बुद्धिर्भवति चिन्मात्ररूपा द्वैतैक्यवर्जिता ।। ६।२-१८६।५१

सम्यग्ज्ञानी ययार्थ दर्शी महात्मा कि बुद्धि द्वैत और ऐक्यसेरहित चिन्मात्र रूप होती है । ६२-१८६।५१

ज्ञानस्य ज्ञेयता नास्ति केवलं ज्ञानमव्ययम् ।
अवाच्यमिति बोधोन्तः सम्यग्ज्ञानमिति स्मृतम्।। ६।२-१९०।५

अधिष्ठान चिन्मात्ररूप ज्ञानका ज्ञेयभाव नहीं होताहै । केवल ज्ञान अविनाशी और न कहेजानेवाला है । इसलिए (भीतर) बोध होना सम्यग्ज्ञान है ऐसा बतलाया है ( ये सब दृश्यके बोध में दृश्यको हटाकर बोध मात्र में ही पर्यवसान होना तत्त्व साक्षात्कार है ।

६।२-१९०।५

चिन्मात्रं पुरुषं विद्धि चेतनाज्जीवनामकम् ।
यच्चेतति स जीवोऽन्तस्तन्मयो भवति क्षणात् ।। ६।२-१६३।४

चित्त में प्राप्त हुवा विषय प्रकाश करनेसे (चित्तके अधीन होनेसे) जीव नामका पुरुष जानो । जो चेतना करता है वह जीव है। वह जीव भीतर क्षणमें ही तन्मय होता है।

६।२-१६३।४

संविदं संविदाकाशे संरोप्य हृदि तिष्ठतः ।
स्वयमेव मनः शाम्येन्नीहार इव शारदः ।। ६।२-१६३।७

चित्तावच्छिन्न (चित्त में स्थित ) संवित्को अर्थात् जीवको हृदयवर्ति-हृदय में स्थित संवित् (आकाश में )ब्रह्म में ( ऐक्य करके रहनेवाले मन शरत् समय में हिमकी तरह स्वयं शान्त हो जाता है।

६।२-१६३।७

अन्तः संवेदनं भाति स्वं बाह्यार्थतया यतः ।
क्व द्वैतं क्व च वार्थश्रीः स्मृतिरेवमतः कुतः ।। ६।२-१६७।२८

वाह्य विषय अपने अन्तःकरण में ज्ञानस्वरूपसे प्रकाश होने पर द्वैत, विषय, स्मृतियां कुछ भी नहीं होती हैं। ६।२-१६७।२८

आश्वस्तान्तःकरणः क्षीणविकल्पः स्वरूपसारमयः ।
परमशमामृततृप्तस्तिष्ठति विद्वान्निरावरणः।। ६।२-१७९।५६

विद्वान् उपाधि रहित होकर अन्तः करण शान्त करके विकल्प रहित होता हुआ अपना ही स्वरूप सार रूप होकर परम शान्ति रूपी अमृत से तृप्त होकर रहता है । ६।२–१७१।५६

अनुभवितैवानुभवनं सत्यं स्वात्मानमप्यसन्तमिव ।
अनुभवतियत्त्वेन स्वप्ननटः स्वप्नदेशमिव ।। ६।२–१७३।३३

(ज्ञान के वाद) अनुभव करनेवाला ही अनुभव रूप में होता है । स्वप्न के नट सपनें में रहा देशको अनुभव किया हुआकी तरह (अज्ञानावस्था में) सत्य अपनेको भी असत् की तरह यह इतना रहा है ऐसा भान करता है । ६।२–१७३।३३

बोधमात्रं भवेज्ज्ञानं भावसाधनमात्रकम् ।
न ज्ञानज्ञेययोर्भेदः पवनस्पन्दयोरिव ।। ६।२–१९०।७

भावार्थ (धातु के अर्थ) में "ज्ञा" धातुसे ल्युट् प्रत्यय होकर वना हुवा ज्ञान शब्दका अर्थ बोध मात्र है । हवा और स्पन्दन की तरह ज्ञान और ज्ञेयका भेद नहीं है । अर्थात् ज्ञेय जगत् ज्ञानकी मायासे वना हुवा है । ६।२–१९०।७

द्रष्टा न याति दृश्यत्वं दृश्यस्यासंभवादतः ।
द्रष्टैव केवलो भाति सर्वात्मैकघनाकृतिः ।। ६।२–१९०।२५

दृश्यके असंभव होनेसे (अर्थात् दृश्य न देखेजानेसे) द्रष्टा दृश्य नहीं होता है । अतः केवल सर्वात्मा घनस्वरूप द्रष्टा ही प्रकाश होता है ।– ६।२–१९०।२५

बोधात्मनि न मोक्षोऽस्ति न बन्धोऽस्तीति निश्चयः ।६।२–१६०।३६।।

बोध स्वरूप आत्मा में मोक्ष तथा बन्धन भी नहीं है। यह निश्चय है। ६।२–१६०।३६

चिद्भात्येव हि सर्गादौ कचन्ती भाति सर्गवत् ।
भासनीयं च भानं च रूपं यत्र स्वयंप्रभा ।। ६।२–१६१।६

सृष्टिके आदि में चिन्मात्र प्रकाश है।सृष्टिको प्रकाशित किया हुवा की तरह वह स्वयं प्रकाश हो रहा है। प्रकाश्य तथा प्रकाश एवं रूप जो सृष्टिके आदि काल में जो स्वयं प्रभा है वह प्रकाश रूप से स्थित है। ६।२–१६१।६

सर्वं शान्तं निरालम्बं विज्ञानं केवलं स्थितम् ।
अनन्तं चिद्घनं व्योम नीरागमपकल्पनम् ।। ६।२–१६२।३

सभी शान्त, आलम्वनशून्य,केवल विज्ञान स्वरूपसे युक्त, अनन्त, कल्पना न किये जानेवाले, रागरहित, घन चिदाकाश है।६।२–१६२।३

अभिन्नबोधसद्रूपस्वरूपानुभवे स्थितः ।
व्युत्थितः सन्निरुद्धश्च यः पश्यति स शाम्यति ।। ६।२–१६४।१७

जो व्युत्थित निरुद्ध समाधि में आरूढ होके अभिन्न बोध सद्रूप स्वरूपानुभव में रहता है (अर्थात् समाधि द्वारा अपने स्वरूप अनुभव कर के निरोध और व्युत्थानको उदासीन वृत्ति से जो देखता है वही संसारके विक्षेपसे शान्त होता है। ६।२–१६४।१७

प्राप्तज्योतिर्बोधशुद्धिः परमन्तः प्रकाशवान् ।
नीहारः शरदीवाशु स्वयमेवोपशाम्यति ।। ६।२–१९४।४०

आत्म ज्योतिको प्राप्त, ज्ञानसे शुद्ध अन्तःकरण प्रकाशित व्यक्ति शरद् ऋतु में कुहरे के समान स्वयं शान्त होता है। ६।२–१९४।४०

विभातीवासदेवेदमसंकल्पेन शाम्यति ।
एतच्छान्तिस्तु निर्वाणमित्येव परमार्थता ।। ६।२–१९५।२

असत् (नही रहा हुआ– झूठा) यह जगत् सङ्कल्प से प्रकाशित की तरह है। (यही निर्वाण निष्कर्ष है। असङ्कल्पकी दृढता से पाए जाने वाले तत्त्व ज्ञान से इसका शमन होता है। यह मुक्ति साधनका निष्कर्ष है( यह जगद्भावनाकी शान्ति होना ही निर्वाण पद है यही मोक्षका निष्कर्ष है ) ऐसा यह ही परमार्थता (वास्तविकता) है।
६।२–१९५।२

निर्वाय निज आत्मायं परिवृत्यावलोकितः।
चेत्योन्मुखत्वमुत्सृज्य संतिष्ठेच्छान्त आत्मनि।।६।२–१९५।३२

इस आत्मा (मन)को वाह्यदृष्टिसे हटाकर एवं विषयकी उन्मुखता (विषयकी तरफ नलगाना) का भी त्यागकर समाधि में लगाके चरम साक्षात्कार वृत्तिसे देखकर शान्त हो के आत्मा में रहना (आत्म चिन्तन करना)। ६।२–१९५।३२

बृंहति ब्रह्मणि ब्रह्म व्योम व्योमनि वर्द्धते ।
न चोप्रपद्यते किञ्चिद्ब्रह्म व्योम्नि विबृंहणम्।।६।२-१९५।४९

ब्रह्म ब्रह्म में बढता है। बृम्हाकाश आकाश में बढता है। ब्रह्म आकाश में बढता है ऐसा कहना युक्तिसंगत नहीं है। ६।२–१९५।४९

स्वभावः कारणं नाम संसारोत्तरणं प्रति।
असंसक्तं मनो यस्य स तीर्णो भवसागरात् ॥ ६।२-१९९।३२

संसार पार करने में यथार्थ स्वरूपसे हुवा ज्ञान स्वरूप स्वभाव कारण है। जिसका मन किसी विषय में नहीं लगता है वह भवसागरसे पार होता है। ६।२–१९९।३२

ब्रह्मसंकल्पनगरं जगत्तावदिदं स्थितम्।
यद्दृश्यं दृश्यबोधेन ब्रह्मैव ब्रह्मबोधतः॥ ६।२–२०८।२

यह जगत् ब्रह्म सङ्कल्प नगर (ब्रह्म मे सङ्कल्प से झूठा ही भावना किया हुआ नगर) है ऐसी स्थिति है। क्योंकि (अज्ञानके कारण) ब्रह्म ही दृश्य रूप भाव से दृश्य है ऐसा भान हुआ है। वही ब्रह्म (अज्ञान हट जाने पर) ब्रह्म रूप से बोध होने पर ही ब्रह्म ही है। ६।२–२०८।२

चिद्रूपब्रह्मसङ्कल्पवशादेवैतदङ्ग सत्।
चिदुन्मेषनिमेषौ यौ तावेतौ प्रलयोदयौ॥ ६।२-२०८।९

जगत् सत् है ऐसा मन होना भी चिद्रूपके संकल्प वशसे ही है। जो चित् के उन्मेष (प्रकाश) निमेष (अप्रकाश) है वही प्रलय और उदय है। ६।२–२०८।९

ब्रह्मैव तदिदं सर्वं निर्नामैवामलं नभः ।
किमप्येवाजमाशान्तमादिमध्यान्तवर्जितम् ।। ६।२-२११।३

ये सब दृश्य जगत् अनिर्वचनीय, अज, शान्त, आदि-मध्य-अन्त रहित, ज्ञानशून्य ब्रह्म ही है । ६।२—२११।३

चिद्भानमात्रमित्युक्तं ब्रह्मेति कलिताभिधम् ।
परात्परमिति प्रोक्तं तत्तु निर्नामकं पदम् ।। ६।२-२११।४

ब्रह्म और परात्पर यह नाम भी चिद्भामात्र है। उस चिद्भानके नाम और पद कुछ भी नहीं है । ६।२—२११।४

अस्यैतद्वस्तुनो रूपं चिद्व्योम्नो विततात्कृतेः ।
रूपमत्यजदेवाच्छं यदित्थमवभासते ।। ६।२-२१३।१६

यह ऐसा सत्य वस्तु व्याप्त आकार चिदाकाशका निर्मल स्वरूप नछोडकर इसी तरह शुद्ध रूप से प्रकाश होता है। ६।२—२१३।१६

स्मृतिर्वाग्दृष्टिसत्ता च स्वप्ने बन्ध्यासुतेऽजले ।
मरीचिका यथा तद्वज्ज्ञानात्सांसारिकी स्थितिः ।।६।२-२१६।१३

अतीत (भूतकाल) अनागत (भविष्य) और असन्निकृष्ट दूरस्थ विषयों में भी स्मृति (परोक्षधी) और वचनके व्यवहार

 

वर्तमान विषय में दृष्टि की सत्ता (प्रत्यक्ष) तत्त्व ज्ञानसे प्रतीत होनेंपर वन्ध्यासुत (जिसकी सन्तति कभी नहुई हो)। जैसे विषय में विषय नही रहता है, मरुभूमिमें (वालुकामें) मरीचिका (मृगतृष्णा) की तरह प्रतीति ज्ञानमें विषय के अभाव के समान ज्ञान प्रतीति मात्र में संसारकी स्थितिसत्य नही हैं। इस में सन्देह नहीं है।

६।२–२१६।१३

तदेवेदं जगत्सर्वं पूर्णे पूर्णं व्यवस्थितम्। ६।२-२१६।२०॥

वही ब्रह्महीं इस सब जगत् में पूर्ण-पूर्ण हो रहा है।

६।२।२१६।२०॥

यत्सर्वं खल्विदं ब्रह्म तज्जलानिति च स्फुटम्।
श्रुत्या ह्युदीर्यते साम्नि तस्मै ब्रह्मात्मने नमः॥ ६।२-२१६।२५

"सर्वं खल्विदं ब्रह्म तज्जलानिति" ये सब नाम, रूप, विकृत, प्रत्यक्षादि, विषय ब्रम्हही है। उसी ब्रह्मसे सब पैदा होते हैं। और उसी ब्रह्म में ब्रह्मस्वरूपसे लीन होते हैं। इसलिये उसी ब्रह्मकी शान्त होकर उपासना करना इस श्रुतिसे सामवेद में जो बताया है उसी ब्रह्मस्वरूप को नमस्कार। ६।२–२१६।२५

## ब्रह्मसूत्रम्

जन्माद्यस्य यतः। १।१।२

इस जगत्के जन्म, स्थिति, नाश जिस सर्वज्ञ सर्वशक्तिमान् से होता है वह ब्रह्म है। १।१।२

शास्त्रयोनित्वात्। १।१।३

शास्त्र (ऋग्वेदादि) के कारण और वह शास्त्र ही ब्रह्म के यथार्थ स्वरूपका ज्ञान कराने में कारण होने से यह सर्वज्ञ है। (शास्त्र प्रमाण से ही जगत् के जन्म स्थिति लय के कारण ब्रह्म है ऐसा समझा जाता है)

केवल जगत्के कारण होने से भगवान् की सर्वज्ञता नहीं है किन्तु शास्त्रयोनि (कारण) होने से भी भगवान् में सर्वज्ञता रही है। १।१।३

तत्तु समन्वयात्। १।१।४

वह ब्रह्म सर्वज्ञ सर्वशक्तिमान् जगत्की उत्पत्ति, स्थिति, लयका कारण वेदान्त शास्त्रसे ही जाना जाता है। वेदान्त में वाक्यों के तात्पर्य से यही अर्थ बोध कराकर दिखला गया है। १।१।४

ज्ञोऽत एव। २।३।१८

ब्रह्मकी उत्पत्ति नहीं होती है। परब्रह्म अविकृत (विकार रहित) है। वह उपाधिके सम्बन्धके कारण जीवभावसे रहता है। इसी कारण से यह आत्मा है नित्य चैतन्य है। २।३।१८

चिति तन्मात्रेण तदात्मकत्वात्। ४।४।३।६

आत्मा चैतन्य रूप होने से स्वच्छ चैतन्य रूप से रहता है।
४।४।३।६

## सिद्धान्तदर्शनम्

चिद्वैशास्ता । १।१।१२

चित् भीतर और वाहर कर्म का नियन्ता है । १।१।१२

सद्धचन्यत् । १।१।१३

असत् से सत् अलग है (लिप्त नहीं है)

सत्ताऽजायाश्छायावत् । १।२।१

अजावाली प्रकृतिकी अस्तिता छाया की तरह है। जैसे प्रतिबिम्व-की सत्ता मुखादिकी सत्तासे अलग नही होती किन्तु उसका यह प्रति-विम्व है ऐसा व्यवहार होता है वैसे ही प्रकृतिकी अस्तिता है। सत्ता दो प्रकारकी है पारमार्थिकी और प्रातिभासिकी। उन में पुरुषकी सत्ता पारमार्थिकी। प्रकृति और उसके कार्यकी सत्ता प्रातिभासिकी। जो जो प्रातिभासिकी है वह वह ही भ्रान्ति समय में व्यावहारिक होता है। १।२।१

तत्ताधिगमोऽनुबिम्बेक्षणात् । १।२।१४

आत्माके अनुविम्बका पर्यालोचन (विचार) से मायाका स्वरूप आविर्भाव होता है। मायातत्त्व अनिर्वचनीय है तो भी स्वयंवेदनीय है। १।२।१४

मूलप्रकृतिः गुणसाम्या । १।२।१५

गुण साम्य प्रकृति है । १।२।१५

शक्तिर्व्यासित्तिः । १।२।२५

सदा आभासरूप प्रकृतिके स्फूर्तिभेद त्रिगुण (सत्त्व रज तम) संज्ञा होती है। गुणकी विचित्रस्फूर्ति शक्ति है। १।२।२५

सा वै माया दृष्टादृष्टाभ्याम् । १।२।२६

वह शक्ति गुण स्फुरण ही लौकिक अलौकिक दोनों ही हेतु स्फूर्ति कराने वाली, वास्तव में असत्य कराकर भान कराने में समर्थ (अघटन घटना पटी यसी) माया है। १।२।२६

माया—माथ्यते स्वाधिष्ठानाद्भिन्नतया नलभ्यते अथवा मीयन्ते पदार्था अनया (भाष्य)

अपना आधार अधिष्ठान भूत जो भिन्न रूप से नहीं पाया जाता है वा जिसके द्वारा पदार्थ परिच्छिन्न होते हैं वह माया है।

निर्मनस्के साराभिव्यक्तिः । १।३।१९

मनके व्यापार शून्य अन्तःकरण में सार अभिव्यक्ति होती है। जव अन्तःकरण ज्ञानरूपता प्राप्त करनेके लिये व्याप्रियमाण (संलग्न) होता है तव उस अन्तःकरण में सारकी अभिव्यक्ति होती है। जव वह

अन्तःकरण मनोरूप में परिणत होता है तव विषय में लगनेसे सारकी अभिव्यक्ति (ज्ञान) नहीं होती है। १।३।१६

सच्चिदानन्दः पुरुष :। २।१।१

तीनों काल में भी एक रूपसे विराजमान वस्तुको सत् कहाजाता है। स्वयं प्रकाश वस्तु चित् कहाजाता है। निरुपाधि अनुकूल वेदनीयको आनन्द कहाजाता है। ये तीन ही सच्चिदानन्द स्वरूप पुरुष हैं। २।१।१

द्वैतविस्मृतेरभिव्यक्ति :। २।२।११

निरोध समाधि में सव अज्ञानके कार्यका विस्मरण से निजानन्दका भान होता है। २।२।११

तदीक्षा वै सर्वार्था। २।४।६

प्रकृति और पुरुषके पर्यालोचन (विवेक) सव ऐहिक और पार-लौकिक प्रयोजन होता है। २।४।६

द्विधैकोऽपि क्लृप्तेः । ३।२।१

मनकी कल्पनासे एक पदार्थ भी दो प्रकारका होता है । जैसे घट वाहर मिट्टीका है भीतर मनोमय है । ३।२।१

तत्समापत्तिरैकाग्र्यान्मणिवच्चित्तस्य । ३।३।२१

जैसे स्फटिक दूसरी वस्तुके सम्वन्धसे तदाकार होता है वैसे चित्तकी ध्येयाकारता ध्येयमात्रके अवलम्वसे होती है । ३।३।२१

चैतन्यं हि धीस्थं वृत्या स्फुरज्ज्ञानं गवाक्षार्कवत् । ४।१।१

भूत, भौतिक प्रपञ्चाधिष्ठान, वुद्धिरूप ऐने में प्रतिफलित (प्रतिविम्वित) होकर ज्ञेयाकार से गवाक्ष में आए हुवें सूर्य किरणोंके समान अवभासमान ज्ञान है । जैसेकि गवाक्षमार्गसे आया हुवा सूर्य-किरण एक है तो भी हात नचलाने से पृथक् प्रतीत होता है वैसे धीवृत्तिसे धी में (वुद्धि में) स्थित चित् भी पृथक् प्रतीत होता है । ४।१।१

प्रातिभासिकावभासोऽध्यासः । ४।१।११

स्वयं आश्रयकी सत्ता से सत्तावान् जैसे प्रतिभास से होनेवाला भान अध्यास भ्रम है । ४।१।११

प्रमाऽन्या । ४।१।१४

भ्रम से भिन्न प्रमा यथार्थ ज्ञान है ४।१।१४

त्रिपुट्यभानाद्भूमानन्दाभिव्यक्तिः । ४।२।७

ज्ञातृ-ज्ञान-ज्ञेय के भान नहोनेसे अपरिच्छिन्न स्वरूप सुखका आविर्भाव होता है। अर्थात् त्रिपुटी (ज्ञातृ-ज्ञान-ज्ञेय) के अन्तर्धान (लोप) से सच्चिदानन्द, निरुपाधि होके एक होकर अखण्डाकारसे प्रकाश होता है। ४।२।७

स्थितप्रज्ञं ब्रह्मैवाहुः । ४।३।१२

निश्चल ब्रह्मात्म विषय बुद्धि जिसका है उसको ब्रह्म ही कहते हैं। ४।३।१२

निरोधान्ययोश्चिद्विविक्तयोश्चैत्यम् । ४।४।३

निरोधसमाधिकाल और समाधिसे व्युत्थान कालमें कूटस्थ चैतन्य और उससे अलग हुआ भास के क्रम से चैत्य आत्म स्वरूप ज्ञानी को होता है। इस तहर ज्ञानी के व्यवहार में द्वैतभान होने पर भी अद्वैत वस्तु प्रकाश होता है। समाधि में द्वैत भान न होके केवल आत्म भान (प्रकाश) होता है। ४।४।३

प्राणकलाः परस्मिन्नस्तमीयुराम्नायात् । ४।४।१४

प्राण, अपान, समान, उदान, व्यान (वायु) षोडशकला पञ्च तन्मात्रायें ये प्राणवृत्तियाँ है। कला ( पाचों ज्ञानेन्द्रिय, पाचों कर्मेन्द्रिय, एक अन्तःकरण तन्मात्रा शब्द स्पर्श रूप और गन्ध ये सोलह) श्रुतिके कहने से पर ब्रह्म में लय होते हैं। ४।४।१४

## कौलोपनिषत्

ज्ञानं मोक्षैककारणम् ।

ज्ञान मोक्षका एक कारण है ।

मोक्षस्सर्वात्मतासिद्धिः ।

आत्मज्ञानान्मोक्ष : ।

सर्वोंका स्वात्मासे अभेद होना सर्वात्मता है उसकीं सिद्धि मोक्ष है । आत्मज्ञानसें मोक्ष होता है ।

## त्रिपुरामहोपनिषत्

परिस्रुता हविषा पावितेन
प्रसङ्कोचे गलिते वैं मनस्तः ।
शर्वः सर्वस्य जगतो विधाता
धर्ता हर्ता विश्वरूपत्वमेति ।। १५

मन्त्रसे संस्कारकिया गया, देवीकी पूजा करके वचा हुवा हवि खानेसे मन (अन्तःकरण) से संकोच (निर्व्युत्थान) विलीन होनेपर निश्चय सर्वस्वरूप होता है । सब जगत् के विधाता ब्रह्मा, पालनकर्ता विष्णु, हरण कर्ता रुद्र वही पुरुष होता है । विश्वरूप होता है । १५

## भावनोपनिषत्

हरिः ॐ आत्मानमखण्डमण्डलाकारमावृत्य

सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत् ।

श्री गुरुः सर्वकारणभूता शक्तिः । १

भगवान् हरि ही ॐ कार रूप ब्रह्म है । १

परिपूर्ण मण्डलाकार, सव ब्रह्माण्डको आच्छादन करनेवाला स्वप्रकाश आत्माका ध्यान करना । १

श्री गुरु ही सबोंका कारणभूत शक्ति है । १

निरुपाधिकसंविदेव कामेश्वरः । २७

उपाधिरहित शुद्धचैतन्य ही बिन्दुरूप कामेश्वर है । २७

सदानन्दपूर्णः स्वात्मैव परदेवता । २८

सदानन्द पूर्ण स्वात्मा ही परदेवता ललिता है । २८

अन यचित्तत्वेन सिद्धिः । ३०

एकाग्रचित्तसे सिद्धि होती है । ३०

# बह्वृचोपनिषत्

ॐ देवी ह्येकाग्र आसीत् । १

जगत् की उत्पत्तिसे पहले देवी सगुण निर्गुण दोनों स्वरूपवाली एक थी । १

सैषा परा शक्तिः । ३

इन में ब्रह्म-विष्णु-रुद्रसे भी आधिक्यहोने से यह दैवी पराशक्ति है । ३

सा वै प्रत्यक् चितिः । ४

त्रिपुरसुन्दरी ही प्रत्यक् चिति है । वह आत्मा है । चित् शक्ति में शक्तिके अंश रहित अद्वितीय चित् है आत्मा है । वह ललिता वस्तु अद्वितीय परिपूर्ण परब्रह्म है । दूसरा असत्य अनात्मा है । ४

सैव आत्मा ।
चिद्विद्याऽद्वितीया ब्रह्मसंवित्तिः ।
तदद्वितीयमखण्डार्थं परं ब्रह्म । ५

चित् शक्ति में शक्ति के अंशरहित चित् ही आत्मा है । उससे अलग शक्तिका अंश असत्य अनात्मा है । इसलिये यह चित् संविन्मात्र

स्वरूप है। चक्षुरिन्द्रियसे प्रत्यक्ष होनेवाले घटादि भावकला कहेजाते हैं। चक्षुरिन्द्रियसे प्रत्यक्ष नहोनेवाले केवल मानस प्रत्यक्ष होनेवालेको अभावकला कहते हैं। चित् निष्प्रतियोगिक ज्ञप्तिमात्र होनेसे वह दोनों ही कलाओंसे निर्मुक्त है। चित् वेदनमात्र स्वरूप अद्वितीय ब्रह्म संवित्ति तरङ्ग शून्य सच्चिदानन्द समुद्ररूप यह महात्रिपुरसुन्दरी बाहर भीतर प्रवेश करके सर्वाधिष्ठान सर्वान्तर्यामी रूपसे स्वयं एक ही प्रकाशमान है। जो अनन्तकोटि ब्रह्माण्ड पटल है वह सन्मात्र है। जो भानहोता है वह चिन्मात्र है। जो प्रिय है वह आनन्द है। इसलिये ये सब आकारवाली महात्रिपुरसुन्दरी है। "त्वम्" "अहम्" सब विचक्षण्य, सर्वदेवता है। दूसरे सब महात्रिपुरसुन्दरी है। सत्य एक ललिता वस्तु है। वह अद्वितीय अखण्डार्थ परब्रह्म है। ५

अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत्। ६

अविद्याओंका नाश होनेके बाद एक परतत्त्व अधिष्ठान महत् परब्रह्ममात्र शेष रहता है। ६

## अरुणोपनिषत्

विभ्राजमानां हरिणीं यशसा संपरिवृताम्।
पुरं हिरण्मयं ब्रह्मा विवेशापराजिता ॥

प्रकाशमान सुवर्णमय कीर्तिसे ढके हुए चिन्तामणि गृह में ब्रह्मा एवं अपराजिता नामवाली चन्द्रकलाने प्रवेश किया।

## कालिकोपनिषत्

ॐ ब्रह्मरन्ध्रे ब्रह्मरूपिणी ।
ॐ सत्वं (सत्यं) तत्सर्वम् (तत्सत्) ।

भगवती कालिका ब्रह्मरन्ध्र में ब्रह्मरूपिणी है । वह तुम ही हो । वह सत्य सत् है ।

## तारोपनिषत्

ब्रह्मरन्ध्रे तारिणी । तारयतीति तारा ।

ब्रह्मरन्ध्र में पहुचानेवाली तारा है ।

## ईशावास्योपनिषत्

स पर्यगाच्छुक्रमकायमव्रण-
मस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथा-
तथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः । ८

वह आत्मा आकाशके समान व्यापी है । ज्योतिष्मान् है । शरीर रहित (लिङ्ग शरीर रहित) नाडी रहित अक्षत स्थूल शरीर रहित अविद्यारूप मलशून्य धर्माधर्म वर्जित है । सर्वद्रष्टा भूत भविष्यत्

